# श्री मदमृतानन्दनाथयोगि

प्रवरविरचितं

# श्री सौभाग्यतन्त्रम्

(श्री देवीपारायणक्रमविधिः हादिविद्याप्रतिपादकः)

— ० —

## श्रीसौभाग्यतन्त्रे

### प्रथमोल्लासः

अखण्डैकरसानन्द निष्यन्दामृतरूपिणीम् ।
चिन्मात्ररूपिणीं विद्यां वन्दे सानन्दरूपिणीम् ॥ १ ॥
अथ वक्ष्ये विस्तरेण पारायणविधिं परम् ।
यस्य विज्ञानमात्रेण साक्षात् परशिवो भवेत् ॥ २ ॥
कालस्वरूपमज्ञात्वा सिद्धये यो जपेन्मनून् ।
कोटिकोटिजपेनापि सिद्धिस्तस्य न जायते ॥ ३ ॥
कालस्वरूपवि ज्ञान महर्गण विधानतः ।
अष्टाङ्गक्रमसंप्राप्तिर्नाल्पस्य तपसः फलम् ॥ ४ ॥
उच्यते प्रथमं तत्र सिद्धकाल्या अहर्गणः ।
अष्टाङ्गक्रमसंप्राप्तिर्येन तात्कालिकी भवेत् ॥ ५ ॥
नभर्तुशरपक्षघ्ना गतवत्सरमिश्रिताः ।
नवाम्बरधरा युक्ता भवेयुः शकवत्सराः ॥ ६ ॥
षष्टिपूर्तौ तु चक्राङ्केष्वेकमेकं नियोजयेत् ।
तेन वै खरसाहन्याः शेषं पूर्ववदेव हि ॥ ७ ॥

नन्दाद्रीन्दुगुणैर्युतो गतकलिः पक्षेन्दुसंवर्धितो
युक्तोऽसौ मधुराद्यकैः स्वकधृतः खाश्वैर्हृतैः संयुतः ।
देवैराप्तफलैर्युतो नभगुणैर्वृद्धिः सतिथ्यास्त्रिधा-
दोष्टौ शून्यनगाप्तयुक् श्रुतिरसैर्लब्धोऽधिमासैर्दिनः ॥ ८ ॥
एवं संसिद्धिर्मुनिभिस्तन्त्रविद्भिः स्फुटीकृतः ।
सप्तभक्ते तु शुक्रादिः स्यात् प्रतीतावहर्गणः ॥ ९ ॥
उदयं पञ्चभिर्हृते नवभिर्नव वासराः ।
षोडशभिः षोडशाख्या नित्याः पर्यायनामकाः ॥ १० ॥
षट्त्रिंशद्भिर्हृते तद्वद् भवेत् तदुडुयोगकम् ।
कालाङ्काब्ध्यर्तुवेदाश्वैर्हृते तु युगसंततिः ॥ ११ ॥
तच्छेषेऽङ्कत्र्यश्वपूर्णपक्षैर्भक्ते परीवृतिः ।
शेषं रसाद्रिषु हृते वर्षाणि तद्गतानि च ॥ १२ ॥
वर्षशेषे रसगुणैर्भक्तो मासास्तु ते गताः ।
मासशेषं क्रमाज् ज्ञेयं दिननित्याङ्कशेषतः ॥ १३ ॥
एवमष्टाङ्गसंसिद्धि स्तस्मात् तात्कालिकी स्मृता ।
नक्षत्रयोगसंसिद्धिः प्रोक्ता संकल्पवाचने ॥ १४ ॥
शेषमष्टाङ्गकं ज्ञेयं पारायणविदां वरैः ।
अर्काङ्कशरभिन्नेन राशीकरणरोचकाः[१] ॥ १५ ॥
पञ्चभूतांश्च तज्ज्ञानं स्यादह्नां गणके सदा ।
इति ज्ञात्वा श्रीमता च विनियोगः समाचरेत् ॥ १६ ॥

इति श्रीमदमृतानन्दनाथयोगिप्रवर विरचिते
सौभाग्यतन्त्रावहर्गणादिनिरूपणं
नाम प्रथमोल्लासः

१ खेचकाः

# द्वितीयोल्लासः

## अङ्गक्रमनिरूपणम्

अथ पारायणानां च लक्षणानि ब्रुवेऽधुना ।
यानि ज्ञात्वा साधकेन्द्रः सर्वसिद्धिमवाप्नुयात् ॥ १ ॥
चतुरङ्गं च पञ्चाङ्गमष्टाङ्गं द्वादशाङ्गकम् ।
षोडशाङ्गं क्रमाज्ज्ञात्वा पारायणविधिर्भवेत् ॥ २ ॥
तारत्रयं मूलविद्यां वर्षमासदिनोदयान् ।
संयोज्य चतुरङ्गाख्यो विधिरेषः सुसिद्धिदः ॥ ३ ॥
दिनतो वारतः पक्षमासतः षट्त्रिंशतावृतः ।
पञ्चाङ्गक्रमविज्ञेयोः मार्कण्डेयाद्युपासितः ॥ ४ ॥
वाराश्च घटिकाश्चैव दिननित्यास्तथैव च ।
वर्षमासयुगश्चान्ते परिवृत्तिरिति क्रमात् ॥ ५ ॥
[1]अष्टाङ्गक्रमसंप्रोक्तो भृग्वाद्यैः समुपासितः ।
वारं घटिं युगं मासं पक्षार्णं तिथिनित्यकाम् ॥ ६ ॥
परिवृत्तिं महायुगं पूर्णं शवलकं दिनम् ।
महापरिवृत्तिरिति द्वादशाङ्गक्रमो भवेत् ॥ ७ ॥
पूर्णं सत्यं च शबलं खर्वं कामं[2] ततः परम् ।
महापरिवृत्तिश्चैव परिवृत्तिस्तथैव च ॥ ८ ॥
महायुगं युगं वर्षं मासं च लघुमासकम् ।
पक्षं दिनं तिथेर्नित्यं वारं घटिमनुक्रमात् ॥ ९ ॥
नक्षत्रयोगकरणान्येवं तु षोडशाङ्गकम् ।
विंशतिबीजसंख्येयं षोडशाङ्गस्य सर्वदा ॥ १० ॥

१ ०क्रमसंप्रासः g. २ रामं g.

एवं यो वेत्ति पञ्चानामङ्गपारायणानि वै ।
स योगी ब्रह्मनिर्वाणं प्राप्नुयाच्च न संशयः ॥ ११ ॥

इति श्रीमदमृतानन्दनाथयोगिप्रवर-
विरचिते सौभाग्यतन्त्रे पारायणविधौ
पञ्चाङ्गादिक्रमनिरूपणं नाम
द्वितीयोल्लासः

— ० —

## तृतीयोल्लासः

### बीजसंततिनिरूपणम्

अथेदानीं प्रवक्ष्यामि विंशतिर्बीजसंततिम् ।
षोडशाङ्ग विधानोक्तं यज्ज्ञानात् सिद्धिमाप्नुयात् ॥ १ ॥
अकारः पूर्णसंज्ञो हि षकारः सत्यमुच्यते ।
हकारः शबलाख्यो हि स्फ्रें बीजं चैव खर्वकम् ॥ २ ॥
क्लींकारः कामसंज्ञश्च ह्स्फ्रें महापरिवृत्तिः । (?) च महापरीवृती
डकारः परिवृत्तिश्च खं महायुगमुच्यते ॥ ३ ॥
यकारो युगबीजं च न वानीति प्रचक्षते ।
वर्णाक्षराणि षट्त्रिंशदकारादीन्युदीर्यते ॥ ४ ॥
मासाश्च षोडश प्रोक्ताः स्वराणां षोडशं ततः[1] ।
मासस्य दिनसंख्या तु षट्त्रिंशशच्च प्रकीर्तिताः ॥ ५ ॥

१. षोडशत्वतः ह.

अकारादिक्षकारान्ताः षट्त्रिंशद्‌दिनसंततिः ।
योजयेद् बुद्धिमान् [1]सर्वान् लघुमासं विविच्यते ॥ ६ ॥
पञ्चमी दशमी पूर्णा शुक्लपक्षे दिनत्रयम् ।
तथा कृष्णेषु पक्षेषु कल्पयोगक्रमाद् भवेत् ॥ ७ ॥
दिनेष्वेतेषु [2]द्वौ द्वौ च वर्णसंख्या निगद्यते ।
शेषे[3]ष्वेकैकमेवात्र लघुमासस्य निर्णयः ॥ ८ ॥
पक्षनिर्णयमप्यत्र क्रमप्राप्तो [4]महाद्‌भुतः ।
वक्ष्यते शुक्लकृष्णाभ्यां [5]त्रिंशद्‌दिनफलप्रदः ॥ ९ ॥
पञ्चमी दशमी पूर्ण दिनेष्वेतेषु सर्वदा ।
चतुरश्चतुरो वर्णानुच्चरेद् विधिवत् क्रमात् ॥ १० ॥
अन्येष्वपि दिनेष्वेवं द्वौ द्वौ वर्णात् समुच्चरेत् ।
एवं पक्षस्य संज्ञा हि निर्मिता च मनीषिभिः ॥ ११ ॥
दिनसंख्यामथो वक्ष्ये पारायणसुसिद्धये ।
अकारादिक्षकारान्तन् षट्त्रिंशत् संख्यकांश्चतान् ॥ १२ ॥
दिनार्णानीति प्रोच्यन्ते पारायणविशारदैः ।
नित्याश्च स्वरसंख्याता षोडशस्वरसंस्थिताः ॥ १३ ॥
कामेश्वर्यादिचित्रान्ता सर्वान्ते षोडशी भवेत् ।
पर्यायक्रमतो ज्ञेयमिति शास्त्रस्य डिण्डिमः ॥ १४ ॥
वाराक्षरमथो वक्ष्ये नववर्गाद्यवर्णकान् ।
अळकचटतपयशानित्येवं विनिर्दिशेत् ॥ १५ ॥
नववारा इति ज्ञेया नवनाथात्मकाः क्रमात् ।
प्रकाशश्च विमर्शश्च आनन्दो ज्ञान एव च ॥ १६ ॥

१ सर्वं g. २ लौद्वौ च g. ४ क्रमात् प्रासः g. ५ कृष्णायां g.

सत्यः पूर्णः स्वभावश्य प्रतिभः सुभगस्तथा ।
मासे मासे तु वाराणां चत्वारावृत्तयो भवेत् ॥ १७ ॥
घटिकाश्चाथ विज्ञेया षष्ठिसंख्या दिने दिने ।
पञ्चाशन्मातृकायाश्च विभागः पञ्चधा भवेत् ॥ १८ ॥
अ ए च तयनामानो वर्णाः संपद्यते ततः ।
यस्मिन् दिने तु यो वर्णो ज्ञात्वा तद्घटिकोदयम् ॥ १९ ॥
तदादि गणयेद् धीमानाद्यवर्गं जपेत् पुनः ।
नक्षत्राण्यथ वक्ष्यन्ते वर्णक्रमवशादपि ॥ २० ॥
ळकारादिलकारान्तान् षट्त्रिंशत्संख्यकानिति ।
योगवर्णानि वक्ष्येऽहं संख्या नक्षत्रवद्भवेत् ॥ २१ ॥
[१] अकारादिनकारान्ता योगसंख्याः प्रकीर्तिताः ।
[२] ऋ आदिखान्तकरणाः द्वादशाश्च त्रिरावृतिः ॥ २२ ॥
मासे मासे च विज्ञेयाः षोडशाङ्कमिति स्फुटम् ।
ऋतुनिर्णयमप्यत्र वक्ष्येऽहं जपसिद्धये ॥ २३ ॥
श्रीकरी मोहिनी चैव कामिनी विमला तथा ।
[३] हरिणी [४] भ्रामरी चैव गौरी लक्ष्मीत्यनुक्रमात् ॥ २४ ॥
[५] जपार्चनविधौ ज्ञेयाः शक्तयोऽष्टौ सुसिद्धिदाः ।
पुष्पिणी च कुमारी च मोहिनीं विमला तथा ॥ २५ ॥
जयिनी श्रीकरी चैव पर्वाण्येतानि षट्क्रमात् ।
पुष्पिणीवर्षमासाभ्यां [६] मासं दिनकुमारिका ॥ २६ ॥
वर्षं दिनं मोहिनी च विमिला मासकोदयात् ।
वर्षोदयाभ्यां जयिनी दिनोदयाभ्यां श्रीकरी[७] (?) ॥ २७ ॥

१ अकरादिनकारान्तान् g. २ ऋ आदिखान्तकरणात् g.
३ हारीणी g. ४ भ्रमिणी g. ५ जपार्चने g.
६ दिनं मासं कुमारिका g. ७ श्रीकरी च दिनोदये (?)

इत्येवं पर्वषट्कस्यात् सोमपानमथो ब्रुवे ।
वर्षं मासं तथा प्रोक्तं पक्षं चोदयमेव च ॥ २८ ॥
सोमपानमिति प्रोक्तं बुधैरागमवेदिभिः ।
वर्षं दिनं चोदयं च वारं मासं तथैव च ॥ २९ ॥
वर्षपञ्चकसंयोगात् जपेत् सूर्योपरागकः ।
कामेश्वर्यादिचित्रान्तं दक्षिणायनमुच्यते ॥ ३० ॥
चित्रादिकं समारभ्य कामेश्वर्यन्तमुत्तरम् ।
अयनं चोत्तरेयत्तज्ज्ञानात् सिद्धिप्रदायकम् ॥ ३१ ॥
सूर्यः शुक्रस्तथा चन्द्रः केतुर्भूमिसुतो बुधः ।
राहुर्गुरुः शनिश्चैव ग्रहाणां जप ईरितः ॥ ३२ ॥
प्रतिमासेऽपि विज्ञेयश्चतुर्वारगतिक्रमः ।
इत्येवं षोडशाङ्गादि संप्रोक्तं जपलक्षणम ॥ ३३ ॥
श्रीमता विधिवज्ज्ञात्वा पारायणविधिं भजेत् ।
इति संक्षेपतः प्रोक्तं पञ्चाङ्गानां विनिर्णयः ॥ ३४ ॥
षोडशाङ्गविधानं च ऋत्वादिकमुपक्रमात् ।
गोपनीयं प्रयत्नेन जपनीयं परात्परम् ॥ ३५ ॥

इति श्रीमदमृतानन्दनाथयोगिप्रवरविरचिते
सौभाग्यतन्त्रे पारायण विधौ षोढशाङ्ग
बीजसंतत्यादिनिरूपणं नाम
तृतीयोल्लासः

—०—

## चतुर्थोल्लासः

### पारायणसंख्यानिरूपणम्

अथ पारायणानां च तत्त्व संख्याविनिर्णयः ।
उच्यते प्रथमं तत्र **सिद्धिदं** चतुरङ्गकम् ॥ १ ॥
**नाथाख्यं** तु द्वितीयं स्यात् **चक्रेशीनां** तृतीयकम् ।
**घटिः** पारायणं तुर्यं पञ्चमं **नाम**संज्ञकम् ॥ २ ॥
**मन्त्रपारायणं** षष्ठं **तत्त्वाख्यं** चैव सप्तकम् ।
**नित्याख्य**मष्टमं चैव नवमं **मातृका**ह्वयम् ॥ ३ ॥
दशमं **लघुमासाख्यं** **पक्ष**मेकादशं भवेत् ।
द्वादशं **तिथिनित्याख्यमृत्वाख्यं** तु त्रयोदशम् ॥ ४ ॥
चतुर्दशं **राशिसंज्ञं** **खेटं** पञ्चदशं स्मृतम् ।
षोडशं **भूतिसंज्ञं** च **हंसं** सप्तदशं स्मृतम् ॥ ५ ॥
**वशिन्य**ष्टादशं चैव **युगनाथो**नविंशकम् ।
**मुद्राह्वयं** [1]विंशतिं च **चक्राख्यं** त्वेकविंशतिः ॥ ६ ॥
द्वाविंशतिं च **रश्मीनां** पारयणमिति[2] क्रमात् ।
**षट्पर्वणां** ततः षट् च पूर्वारभ्याष्टविंशतिः ॥ ७ ॥
ऊनत्रिंशत् **सोमपानं** पारायणमितीर्यते ।
**सर्वमङ्गलाया**स्त्रिंशत्[3] सर्वमङ्गलसिद्धिदम् ॥ ८ ॥
**सूर्योपराग**संज्ञे तदेकत्रिंशतिमं भवेत् ।
द्वात्रिंशच्च **चित्रायास्त्रयस्त्रिंशद्** **रमाह्वयम्** ॥ ९ ॥
**भुवनायाश्चतुस्त्रिंशत्** **कामेश्याः** पञ्चत्रिंशकम् ।
पारायणमिदं सर्वं जगद्रञ्जनकारकम् ॥ १० ॥

१ विंशतिमं ग. २ मनुक्रमात् ग. ३ सर्वमाङ्गल्यसिद्धिदम् ग.

**आम्नायसंज्ञं** षट्त्रिंशत् प्रोक्तं पारायणं परम् ।
शरण्यं सर्व लोकानां वरेण्यं त्रिदिवौकसाम् ॥ ११ ॥
श्रीमत् त्रिपुरसुन्दर्यानन्दसाम्राज्य दायकम् ।
इति संक्षेपतः प्रोक्तं सूत्रं परमदुर्लभम् ॥ १२ ॥
एतानि तत्त्वसंख्यानि विद्यापारायणानि वै ।
यः करोति नरो लोके स मुक्तो नात्र संशयः ॥ १३ ॥

इति श्रीमदमृतानन्दनाथयोगिप्रवरविरचिते
सौभाग्यतन्त्रे पारायणविधौपारायण
संख्यानिंरूपणं नाम चतुर्थोल्लासः

—०—

## पञ्चमोल्लासः

अथ विद्यापारायणविधिः (१)

अथोच्यते समासेन **विद्यापारायणा**नि वै ।
यानि ज्ञात्वा साधकेन्द्रो भवेल्ललितविग्रही ॥ १ ॥
तत्रादौ प्रथमं वक्ष्ये **सिद्धिदं** चतुरङ्गकम् ।
सर्वपारायणानां च मूलभूतं सनातनम् ॥ २ ॥
तारो वाग् भुवना श्रीश्च मूलविद्यामपि [१]क्रमात् ।
अष्टाङ्गार्णा ततश्चोक्त्वा मुखवृत्तमथोच्चरेत् ॥ ३ ॥
परायणानांच ततश्चतुर्थः स्वरतः परः ।
हंसः पल्लवसंयुक्तंक्रममेवं विदुर्बुधाः ॥ ४ ॥

१ **मूलविद्यामपि** g.

अलकचटतपयशा इत्येवं च नवक्रमात् ।[1]
[2]नववर्णैः प्रथमकं ततो वर्णद्वितीयकम् ॥ ५ ॥
वर्णद्वयाभ्यां तृतीयं त्रिवर्णैश्च तुरीयकम् ।
इत्येवं चतुरङ्गं हि गुरुत शास्त्रतस्त्विदम् ॥ ६ ॥
ज्ञात्वा जपेत् प्रथमतो सर्वसिद्धिमवाप्नुयात् ।

इति विद्यापारायणविधिः

## अथ नाथपारायणविधिः (२)

अथ द्वितीयं वक्ष्येऽहं **नाथपारायणं** परम् ॥ ७ ॥
त्रितारादिकमुच्चार्य मूलविद्यादिकं ततः ।
मायां रमां चोक्तवर्णान् नवधा पृथगुच्चरेत् ॥ ८ ॥
प्रकाशादिकमारभ्य सुभगान्तं क्रमात् ततः ।
मण्डलक्रमतो जाप्यं मासेषु चतुरावृतिः ॥ ९ ॥

इति नाथपारायण विधिः

### अथ चक्रपारायणविधिः (३)

अथो तृतीयं वक्ष्यामि **चक्रेशीनां** सुखप्रदम् ।
त्रितारादिकमुच्चार्य मूलविद्यादिकं क्रमात् ॥ १० ॥
अंआमन्ते परामुक्त्वा त्रिपुरेति ततः परम् ।
चक्रेश्वरी रूपिणी श्रीमहात्रिपुरसुन्दरी ॥ ११ ॥
श्रीपादुकां पूजयामीत्येवं नत्यन्तमुद्धरेत् ।
नवचक्रेश्वरी नाम्ना पारायणमितीर्यते ॥ १२ ॥

इति चक्रपारायण विधिः

१ क्रमाज्जपेत् ड.　　२ पृथग्वर्णैः ड.

अथ घटिकापारायणविधिः (४)

**घटिःपारायणं** तुर्यं तत्प्रकारमथोच्यते ।
अएचतयनामानि पञ्चान्युदयकानितु ॥ १३ ॥
तत्र यद् दिवसे यस्योदयं तत् प्रथमाक्षरम् ।
तदादिप्रजपेदेते प्रथमं वर्गमभ्यसेत् ॥ १४ ॥
तारत्रयं मूलविद्यामन्ते तद्वर्ण ईरितः ।
हंसः पदं समुच्चार्येत्येवं षष्टिर्जपो भवेत् ॥ १५ ॥
**घटीपारायणा**ख्येयं षष्टिर्जप इति स्मृतः ।
[१]प्रातःसंध्यात एवेति त्रिकाले वेति **तान्त्रिकाः** ॥ १६ ॥

इति घटिकापारायणविधिः

नामपाराथणविधिः (५)

**नाम पारायण**मथो वक्ष्ये पूर्वा तु मञ्चमम् ।
तत्रादावधिकारार्थं संकल्प्य मातृकां न्यसेत् ॥ १७ ॥
तारत्रयं मूलविद्यां दिननित्यादिकं क्रमात् ।
पूर्वोक्तमेवमुच्चार्य विन्यसेन्मातृकाह्वयम् ॥ १८ ॥
विद्याकूटत्रयं मूलं हृद्बिन्दुषु क्रमान्नयेत् ।
विद्याकूटैर्द्विरावृत्त्या दिननित्यादिभिः सह ॥ १९ ॥
कराङ्गयुगलं न्यस्य कालचक्रं हृदि स्मरेत् ।
तन्मध्यगत श्रीचक्रे कालनित्या वृता पराम्[२] ॥ २० ॥

१ संध्यान्त एवेति ग.

२ नित्यावृताम्बरां ग. (?) योगान्त्यक्षर

देवीं श्रीसुन्दरीं ध्यात्वा मनसार्च्य प्रणम्य च ।
प्राणानायम्य विधिवत् ततस्तु जपमाचरेत् ॥ २१ ॥
मूल अ आ ई प्रथम नाम मुक्त्वा ततः परम् ।
मूल अकाई द्वितीयमेवमुत्तरतो जपः ॥ २२ ॥
अखाई इत्याद्यारभ्य अक्षायीत्यन्तमुच्चरेत ।
विद्या भवन्ति षट्त्रिंशदेवं स्वरविभेदतः ॥ २३ ॥
तत्त्वाक्षराणां प्रत्येकं दीर्घतत्त्वाक्षराण्यपि ।
तुर्ययोगादन्त्याक्ष रषट्त्रिंशत्क्रमरूपतः ॥ २४ ॥
प्रतिवर्गं षट्सप्तत्यधिकं पञ्चशतं क्रमात ।
मिलित्वेत्यक्षरैः सर्वैः षट्त्रिंशदुत्तरं शतम् ॥ २५ ॥
सप्तशताधिकं विंशत्सहस्राः प्रभवन्ति च ।
तासु प्रत्यहमेकस्य वर्गस्य जपशक्तितः ॥ २६ ॥
[1]काल प्राप्तं क्रमं पूर्वमावृत्त्या च क्रमं भजेत् ।
**नामपारायणमि**ति पञ्चमं समुदाहृतम् ॥ २७ ॥
इत्येवं जपतो यो वै नामपारायण क्रमम् ।
स सर्वसिद्धिं संप्राप्य देवीदर्शनमाप्नुयात ॥ २८ ॥

इति नामपारायणविधिः

इति श्रीमदमृतानन्दनाथ योगिप्रवरविरचिते
सौभाग्यतन्त्रे पारायणविधौ नाम पारायण
निरूपणं नाम पञ्चमोल्लासः

१ कालप्राप्तक्रमं पूर्वमावृत्यानुक्रमं भजेत् ख०

# षष्ठोल्लासः

## मन्त्रपारायणविधिः (६)

अथ षष्ठं प्रवक्ष्यामि **मन्त्रपारायणं** परम् ।
[1] यस्याचरणतो नूनं देवीपुत्रो भवेन्नरः ॥ १ ॥
* माया कुण्डलिनी चैव क्रियामधुमती तथा ।
काली कला मालिनीं च मातङ्गी विजया जया ॥ २ ॥
तथा भगवती देवी शिवा च शांभवी दशा [2] ।
ततश्च प्रथमा शक्तिस्तथा शंकरवल्लभा ॥ ३ ॥
ततो त्रिनयना वाग्वादिनी चैव तुभैरवी ।
ह्रींकारी त्रिपुरा चैव परापरमयी तथा ॥ ४ ॥
माता कुमारीति दश मन्त्रविद्या तथा स्मृताः ।
एभिः श्रीमूलविद्याया मन्त्रपारायणक्रमः ॥ ५ ॥
[3] गुरूक्तवर्त्मना वक्ष्ये नानामन्त्रविचारतः ।
[4] विविक्ते सम्यगासीनः शुचिस्नातः कृताह्निकः ॥ ६ ॥
भूशुद्धिं भूतशुद्धिं च कृत्वा वै मातृकां न्यसेत् ।
मूलविद्याया ऋष्यादिन्यासत्रयपुरःसरम् ॥ ७ ॥
चतुरासन वाग्देव्या न्यासं च विन्यसेत् ततः ।
हृदब्जे ललितां ध्यात्वा मनसार्च्य प्रणम्य च ॥ ८ ॥

१ यस्योच्चारणः g.
२ तथा g.
३ गुर्वुक्तः g.
४ विविक्तः g.

* अत्र मायेत्यादि नाम्न निर्वचनं तु श्रीसिंहराजभाष्यानुसारेण विविच्यते—